शाख्यंव्यदर्शयत् ॥ यत्रनन्दीसमाराध्यमहादेवञ्जगत्पतिम् ॥ २७ ॥ अभिन्नेनशरीरेणगाणपत्यमवाप्नुयात् ॥ नन्दि
कुण्डम्माहाकुण्डय्यँत्रनन्दीपुराकरोत् ॥ २८ ॥ अभिषेकंलब्धवरंपीतंतोयमनुत्तमम् ॥ तत्रस्नात्वाचपीत्वाचकृतकृत्योनरो
त्तमः ॥ २९ ॥ हरस्यसदनय्याँतिनन्दिनोपिमहाश्रियः ॥ तस्यासन्नेमहादेवीन्नातिदूरेव्यवस्थिताम् ॥ १३० ॥ सिद्धेश्वरीय्याँ
निरूपाम्महामायाञ्जगन्मयीम् ॥ त्र्यम्बकोदर्शयामासभैरवायमाहात्मने ॥ ३१ ॥ यत्रनन्दीमहामायामाज्ञयाशशिधा
रिणः ॥ स्तुतिभिर्नतिभिःपूज्यगाणपत्यमवाप्नुयात् ॥ ३२ ॥ सुवर्णमानसस्तत्रनदमुख्योमनोहरः ॥ नन्दिनोनुग्र
हायाशुमानसाख्यंसरस्तुतत् ॥ ३३ ॥ स्वागतश्चाज्ञयाशम्भोःपूर्व्वमेवतपस्यतः ॥ जटोद्भवातत्रनदीहिमवत्प्रभवाशुभा
॥ ३४ ॥ यस्यांस्नात्वानरःपुण्यमाप्नोतिजाह्नवीसमम् ॥ गौरीविवाहसमयेसर्व्वैर्म्मातृगणैकृतः ॥ ३५ ॥ जलाभिषेकोभर्ग्ग
स्यजटाजूटेषुयःपुरा ॥ तैस्तोयैरभवद्यस्माज्जटोदाख्यानदीततः ॥ ३६ ॥ चैत्रेमासिसितताष्टम्यांस्नात्वायस्यान्नरोव्रजेत् ॥
पूर्णायव्वाँनरश्रेष्ठशिवस्यसदनम्प्रति ॥ ३७ ॥ द्वापरस्यतुयागङ्गात्रिःस्त्रोताख्यासरिद्वरा ॥ हिमवत्प्रभवाशुद्धचन्द्र
बिम्बाद्विनिर्ग्गता ॥ ३८ ॥ यस्यांस्नात्वामहामाघ्याम्मात्रयोनौनजायते ॥ चन्द्रसूर्य्यग्रहेस्नात्वाकैवल्यम्प्राप्नुयान्नरः ॥ ३९ ॥
सितप्रभानामनदीमहादेवावतारिता ॥ हिमवत्प्रभवासापिसितादक्षसमुद्रगा ॥ १४० ॥ तस्यान्दशहरायान्तुदशम्यां

शुक्लपक्षके ॥ स्नात्वाविष्णुगृहय्याँतिनरोवैमुक्तपातकः ॥ ४१ ॥ नवतोयानामनदीततःपूर्व्वस्थितापुरा ॥ नवन्नवन्नव
न्नित्यंकुर्व्वन्तीसापुनातिहि ॥ ४२ ॥ नवतोयाततःप्रोक्ताहिमवत्प्रभवैवसा ॥ तस्यांस्नात्वामहामाघ्यान्नरोगच्छतिदेवताम्
॥ ४३ ॥ सम्पूर्णमाघमासन्तुस्नात्वाविष्णुगृहंव्रँजेत् ॥ तासान्नदीनान्तुपतिरगदोनामवैनदः ॥ ४४ ॥ पीठपूर्व्वेस्थितः
पुण्योब्रह्मपादसमुद्भवः ॥ हिमवत्प्रभवःसोपिदेवगन्धर्व्वसेवितः ॥ ४५ ॥ तत्रस्नात्वाचपीत्वाचनरोब्रह्मगृहव्व्रँजेत् ॥ का
र्तिकंसकलम्मासय्यँोगदाख्येमहानदे ॥ ४६ ॥ स्नानङ्करोतिमनुजस्तस्यपुण्यफलंशृणु ॥ इहलोकेत्वरोगःसप्राप्य वैवोत्तमं
सुखम् ॥ ४७ ॥ शेषेब्रह्मगृहम्प्राप्यततोमोक्षमवाप्नुयात् ॥ नन्दिकुण्डेनरःस्नात्वानक्तङ्कुर्य्यात्तदानिशि ॥ ४८ ॥ ततःपर
स्मिन्दिवसेगच्छेज्जलपोशमन्दिरम् ॥ तत्रस्नात्वामहानद्याञ्जलपीशम्प्रतिपूज्यच ॥ ४९ ॥ तस्यान्निशिहविष्याशीसय्यँतस्ता
न्निशान्नयेत् ॥ ततोनुदिवसेप्राप्तेगच्छेत्सिद्धेश्वरींशिवाम् ॥ १५० ॥ ताम्पूजयेत्तथाष्टम्यामुपवासन्तथाचरेत् ॥ चतुर्भुजातु
सादेवीपीनोन्नतपयोधरा ॥ ५१ ॥ सिन्दूरपुञ्जसङ्काशाधत्तेकर्त्रीञ्चखर्प्परम् ॥ दक्षिणेवामबाहुभ्यामभीतिवरदायिनी ॥ ५२ ॥
जटामण्डितशीर्षाचरक्तपद्मोपरिस्थिता ॥ पञ्चाक्षरजपान्तादिर्मन्त्रोस्याःपरिकीर्तितः ॥ ५३ ॥ कामाख्यातन्त्रमेवास्याःपूजने
तन्त्रमीरितम् ॥ एवङ्कृत्वानरोधीरःपुनर्य्योनौनजायते ॥ ५४ ॥ जमदग्न्यभयाद्भीताःक्षत्रियाःपर्व्वमेवये ॥ म्लेच्छछद्मान्युपादा

यजल्पीशंशरणङ्गताः ॥५५॥ तेम्लेछवाचःसततमार्य्यवाचश्चसर्व्वदा ॥ जल्पीशंसब्रमानास्तेगोपयन्तिचतंहरम् ॥ ५६ ॥
तयैवतुगुणास्तस्यमहाशजमनोहराः ॥ तोषयित्वातथासर्व्वाञ्जल्पीशम्पूजयेन्नरः ॥ ५७ ॥ वरदाभयहस्तोयन्द्विभुजःकुन्द
सन्निभः॥तत्पुरुषस्यतुमन्त्रेणपूजयेद्देवमुत्तम् ॥ ५८॥ एवम्पुण्यकरःपीठोजल्पीशस्यमहात्मनः ॥ एवञ्ज्ञात्वानरोयातिश
ङ्करस्यपुरम्प्रति ॥ ५९ ॥ इतिकालिकापुराणेअशीतितमोध्यायः॥ ८०॥ ॥ मार्कण्डेयउवाच ॥ ॥ एतच्छ्रुत्वातुस
र्व्वांदमुत्तमंशङ्करस्यच ॥ भैरवस्यतुवेतालसहितस्यमहात्मनः॥ १ ॥ भूयश्चसगरोराजामुनिमौर्व्वम्महामतिम् ॥ पप्रच्छामो
दसंहृष्टसूनृदेहःतमुत्तमम् ॥ २ ॥ ॥ सगरउवाच ॥ ॥ विचित्रमिदमाख्यातम्भगवन्मुनिसत्तम ॥ कामरूपस्यपीठस्यसं
स्थानन्निर्णयन्तथा ॥ ३ ॥ भूयश्चश्रोतुमिच्छामिविस्तरेणमहामते ॥ वायव्यस्याथमध्यस्यपूर्वभागस्यनिर्णयम् ॥ ४ ॥
यथायस्मिन्निष्ठितोस्तिमहादेवोम्बिकातथा ॥ तत्सर्व्वम्मुनिशार्दूलकथयश्रोतुमुत्सहे ॥ ५ ॥ ॥ और्व्वउवाच ॥ ॥ उक्तो
वायव्यभागस्यनिर्णयोनृपसत्तम ॥ नैर्ऋत्योत्तरमध्याद्रेःशृण्विदानींविंनिर्णयम् ॥६॥ बहुरोकानाम्नदीकरतोयाप्रदक्षिणे ॥
उत्तरश्रावणीचास्तेतत्पूर्व्वङ्कामरूपकम् ॥ ७ ॥ सुरसोनामजीमूतःकामरूपन्ततःस्थितः ॥ निःसृताबहुरोकेतिनदी
तमस्माद्वृषप्रदा ॥ ८ ॥ आसन्नेसुरसाख्यस्यशिवलिङ्गोमहावृषः ॥ महेश्वरीतत्रदेवीयोनिमण्डलरूपिणी ॥ ९ ॥ स्ना

मन्त्रसि-
द्धि[illegible]

का॰ २६१

त्वातुबहुरोकायामारुह्यसुरसाचलम् ॥ महावृषम्पूजयित्वामहादेवीम्महेश्वरीम् ॥ १० ॥ धूतपापोजितद्वन्द्वःपुनर्य्योनौन जायते ॥ चतुर्भुजोवृषारूढोवरदाभयशूलधृक् ॥ ११ ॥ शुद्धस्फटिकसङ्काशोजटावान्समहावृषा ॥ अघोरस्यतुमन्त्रेण पूजास्यपरिकीर्त्तिता ॥ १२ ॥ कामेश्वर्य्याःस्वरूपन्तुमाहेश्वर्य्याःप्रकीर्त्तितम् ॥ पूजार्पितद्वदेवास्यास्तद्वत्फलप्रदायिसा ॥ ॥ १३ ॥ तत्रवासिष्ठकुण्डन्तुवसिष्ठमुनिसेवितम् ॥ यत्रस्थितोवासष्ठस्तुनरकेणनिवारितः ॥ १४ ॥ अप्राप्यगन्तुञ्जीमूत न्नीलाख्यंशसवास्तुतम् ॥ स्वस्नानार्थङ्कृतंतत्रकुण्डंदेवगणार्च्चितम् ॥ १५ ॥ तत्रस्नात्वानरोयातिनाकपृष्ठय्यँथेच्छया ॥ सुरसस्यचपूर्व्वस्याङ्कृत्तिवासाह्वयोगिरिः ॥१६॥ कृत्तिवासाःस्वय्यँन्तत्रसत्यासहवसत्पुरा ॥ चन्द्रिकाख्यानदीयत्रतस्यांस्ना त्वादिव्वँव्रजेत् ॥१७॥ चन्द्रिकायान्नरःस्नात्वासम्पूज्यकृत्तिवाससम् ॥ भाद्रशुक्लचतुर्थ्यांतुनिष्कलङ्कोभवेन्नरः ॥ १८ ॥ पूर्णं भाद्रपदंमासश्चन्द्रिकायान्नरोत्तमः ॥ स्नात्वागच्छतिभूतेशन्दृष्ट्वैवकृत्तिवाससम् ॥ १९ ॥ उत्तरस्त्राविणीनित्यश्चन्द्रिकाख्या सरिद्वरा ॥ नातिदूरेचन्द्रिकायाःपूर्व्वस्यान्दिशिफेनिला ॥ २० ॥ सञ्ज्ञयासासरिच्छ्रेष्ठाशतानन्दावतारिता ॥ ब्रह्मणोदु हितासातुगङ्गापर्व्वतसम्भवा ॥ २१ ॥ फेनिलायान्नरःस्नात्वाब्रह्मोत्थानदिनेपुनः ॥ फाल्गुनेमासिनरकञ्जित्वास्वर्ग्गमवा प्नुयात् ॥ २२ ॥ ततःसिताह्वयापूर्व्वंसरिदुत्तरगामिनी ॥ तस्यांस्नात्वामहाचैत्र्याङ्गङ्गास्नानफलल्लँभेत् ॥ २३ ॥ ततः

पु॰ अ.८१ २६१

पूर्व्वंसुमदनायोजनद्वितयान्तरे ॥ नदीजनकराजेनसमाराध्यवृषध्वजम् ॥ २४ ॥ हितायभैरवाख्यस्यसुतीक्ष्णादवतारिता ॥ सुतीक्ष्णङ्गिरिमारुह्यस्नात्वासुमदनाजले ॥ २५ ॥ माघशुक्लचतुर्थ्यान्तुपूजयित्वामहेश्वरम् ॥ सम्प्राप्यसकलान्कामाञ्छिवलोकायगच्छति ॥ २६ ॥ एतानद्यःकामरूपेनैर्ऋत्यामुत्तरस्त्रवाः ॥ पीठश्चपूर्व्वतस्तत्रत्रिपुरायत्रपूज्यते ॥ २७ ॥ एवन्तेकथितंराजन्महापुण्यदमुत्तमम् ॥ कामरूपस्यनैर्ऋत्यायत्रशम्भुःसदाम्बिका ॥ २८ ॥ पुरैवचमहाराजयानद्योदक्षिणश्रवाः ॥ हिमवत्प्रभवायाताःक्रमशःशृणुभूपते ॥ २९ ॥ अगदस्यनदस्योर्द्ध्वम्भद्राख्यातुमहानदी ॥ भाद्रेकृष्णचतुर्द्दश्यांयस्यांस्नात्वादिवव्रँजेत् ॥ ३० ॥ ततःपूर्व्वंसुभद्राख्यानदीपुण्यतमासदा ॥ वैशाखस्यतृतीयायांयस्यांस्नात्वादिवव्रँजेत् ॥ ३१ ॥ ततस्तुमानसानामनदीपुण्यतमानता ॥ सरसोमानसाख्यात्तुतृणबिन्दूक्तारिता ॥ ३२ ॥ वैशाखंसकलम्मासन्तस्यांस्नात्वानरोत्तमः ॥ विष्णुलोकमवाप्यैवततोमोक्षमवाप्नुयात् ॥ ३३ ॥ हिमवन्निकटेशैलोविभ्राटासमहाद्युतिः ॥ यस्मिन्वसतिभूतेशःसदाभैरवरूपधृक् ॥ ३४ ॥ तस्मात्तुभैरवीनामनदीपुण्योदकाशुभा ॥ प्रज्ञानसाद्याःस्त्रवतिगङ्गेवफलदायिनी ॥ ३५ ॥ यस्याव्वँसन्तसमयेस्नात्वागच्छतिवैदिवम् ॥ यस्यांसम्पूज्यकामाख्यामिष्टंज्ञानमवाप्नुयात् ॥ ३६ ॥ सम्पूज्याथमहामायान्द्विगुणम्प्राप्नुयात्फलम् ॥ ऊर्द्ध्वन्ततोदेवगङ्गावर्णासाख्यासरिद्वरा

॥ ३७॥ हिमवत्प्रभवानित्यंफलदामानसोपमा ॥ सुभद्राद्यास्तुयाप्रोक्तावर्णासान्ताःसरिद्वरा ॥ ३८ ॥ हिमवत्प्रभवास्ता
स्तुसर्व्वाएवोत्तरप्लवाः ॥ पूर्व्वस्तुमदनायास्तुब्रह्मक्षेत्रस्यपश्चिमे ॥ ३९ ॥ रविक्षेत्रय्यँत्रदेवआदित्यःसततंस्थितः ॥ भैरव
स्यहितार्थायत्रसर्व्वेश्वराःस्थिताः ॥४०॥ कामरूपेमहापीठेब्रह्मेन्द्रवरुणादयः ॥ तदानत्वाङ्कयेशेलेश्रीसूर्य्योपिव्यवस्थितः
॥ ४१ ॥ त्रिस्रोतानामयस्यास्तिनदीपूर्व्वादिशिस्थिता ॥ कापोतङ्करणम्पश्चाधस्यकुण्डद्वयंस्थितम् ॥ ४२ ॥ कापोतङ्कुण्डे
विधिवत्स्नात्वाकारणकुण्डके ॥ नत्वाचलंसमारुह्यसम्पूज्यचदिवाकरम् ॥ ४३ ॥ सकृदेवनरोयातिभास्करस्य गृहम्प्रति ॥
सूर्य्यरश्मिसमुद्भूतकापोतकरणामृत ॥ ४४ ॥ पुण्यतोयसाख्यातपापङ्कापोतमेहर ॥ इत्यनेनतुमन्त्रेणस्नात्वाकापोतसं
ज्वरे ॥४५॥करणंसमुपस्पृश्यतत्वशैलेरविय्यँजेत् ॥ त्रिविधंब्रह्मबीजन्तुसहस्रपदमन्ततः ॥४६॥रश्मयेपिचतुर्थ्यन्तुदेवोजा
यातुचेष्टतः ॥ अङ्गबीजमिदम्प्रोक्तंआदित्यस्यातिकामदम्॥४७॥पद्मासनःपद्मकरःपद्मागर्भसमद्युतिः ॥सप्ताश्वःसप्तरज्जु
श्चद्विभुजोभास्करःसदा॥४८॥वर्त्तुलम्मण्डलश्चास्यअष्टपत्रसमन्वितम्॥अङ्गुष्ठाग्राङ्गुलीनाञ्चहृदादीनान्तथाचषट्॥४९॥अ
ङ्गमन्त्रेणसहितउपान्तेवह्निसय्युतः ॥ सर्व्वन्यासेसमुद्दिष्टोमन्त्रःसर्व्वफलप्रदः ॥ ५०॥ हच्छिरस्तुशिखावर्म्मनेत्रास्योदरपृष्ठ
तः ॥ बाह्वोपाण्योर्जङ्घयोस्तुपादयोश्चापिविन्यसेत् ॥५१॥जघनेचसमस्तानिक्रमान्मन्त्राक्षराणिच ॥क्रमाञ्चोत्तरतन्त्रोक्तः

पूजनेपरकीर्त्तितः ॥ ५२ ॥ विसर्जनन्तथैशान्यार्व्विद्याद्यादलशक्तयः ॥ निर्म्माल्यधृक्तत्वचण्डोमाठराद्यास्तुपार्श्वयोः
॥५३॥बीजमुत्तरतन्त्रेस्यपूर्व्वंतःप्रतिपादम् ॥ अनेनविधिनातत्वेपूजयित्वानरोत्तमः ॥ ५४ ॥ सकामानखिलान्प्राप्यइहलो
केत्वरुक्तनुः ॥ सुखीशेषेतथोगच्छेद्भास्करस्यालयम्प्रति ॥५५॥नातिदूरेभास्करस्यदक्षिणास्यांशुभाह्वयाः ॥ तस्योर्द्ध्वसानौव
सतिलिङ्गंशाङ्करमुत्तमम् ॥ ५६ ॥ परिवार्य्यसदायान्तिमाहाकायास्तुवानराः ॥ परिवार्य्यावतिष्ठंतेसेवमानाश्चशङ्करम्
॥ ५७ ॥ तिस्रोतायान्नराःस्नात्वायःपश्येत्तुशुभाचले ॥ महात्मानम्महादेवङ्कामभिष्टल्लँभेन्नरः ॥ ५८ ॥ ततःपूर्व्वंसुरनदीना
म्नाकुसुममालिनी ॥ क्षीरोदाख्यापरातस्मात्तेगतेदक्षिणश्रवे ॥ ५९ ॥ ऐतेअपिमाहाराजपुण्यतोयेमृतश्रवे ॥ तयोःस्नात्वा
न्नरोयातिशङ्कररस्यालयम्प्रति ॥ ६० ॥ ततोपिपूर्वतोदेवीलीलाख्याचापरानदी ॥ यस्यांस्नात्वामहानद्यांशिवलोकायगछति
॥६१॥ ततःपूर्व्वंशिवाचण्डीख्याचण्डिकाख्यामहानदी ॥ निर्य्यांतिधवलाख्यान्तुपर्व्वतात्सुमनोहरात् ॥६२॥ शिवलिङ्गद्वय
न्तत्रनातिदूरेव्यवस्थितम् ॥ गोलोकश्चाथशृङ्गीचक्रोशमान्त्रान्तरंस्थितम् ॥ ६३॥ चण्डिकायान्नरःस्नात्वाआरुह्यधवलेश्वर
म् ॥ दक्षिणंसागरव्वीक्ष्यपृष्ठ्वागोलोकसंज्ञकं ॥ ६४ ॥ ततोवतीर्य्यंचपुनःशृङ्गिणंभूमिपीठगम् ॥ शिवपूजाविधानेनपूजयि
त्वामहेश्वरम् ॥ ६५ ॥ अश्वमेधस्ययज्ञस्यफलंसम्प्राप्यमानवः ॥ सर्व्वान्कामानवाप्येहदेहान्तेशिवताव्व्रँजेत् ॥ ६६ ॥

एतायाःकथितानद्यःसर्व्वावैदक्षिणश्रवाः॥तस्मादीशानकाष्ठायाम्पर्व्वतोगन्धमादनः॥६७॥ यत्रशृङ्गाह्वयल्लिङ्गंशिवस्यास्ते
महत्तरम्॥ सएवपर्व्वतश्रेष्ठःप्राप्तःक्षेत्रस्यपश्चिमे॥६८॥ धृत्वाब्रह्मशिलांदेवीसाचित्रंप्रतिगामिनी॥ गन्धमादनकस्यान्ते
भृङ्गेशस्यपदद्वयम्॥ ६९॥ स्रवद्गङ्गाजलश्चास्तेकुण्डन्तत्रान्तरालकम्॥ अन्तरालककुण्डेतुस्नात्वापीत्वाचतज्जलम्
॥ ७०॥ भृङ्गेशस्यततोदृष्ट्वाशिलासंस्थम्पदद्वयम्॥ पूजयित्वामहाभृङ्गङ्गाणपत्यमवाप्नुयात्॥ ७१॥ शम्भुपादसद्भूतम
न्तरालदृषाकरम्॥वृषध्वजपदानांत्वंसर्व्वेषांजयमहावृष॥७२॥ इत्यनेनतुमन्त्रेणस्नानङ्कृत्वान्तराजले॥भृङ्गदेवन्ततःपश्येत्कु
ब्जपीठान्तवासिनम्॥ ७६॥॥ मणिकूटस्याथगिरेर्गन्धमादनकस्यच॥ मध्येस्रवतिलौहित्योब्रह्मणाग्निसमुस्थितः॥७४॥
वर्णाशायादक्षिणस्यांल्लौहित्योनामसागरः॥ मणिकूटस्थितःपूर्व्वंहयग्रीवोहरिर्य्यतः॥ ७५॥ सहयग्रीवरूपेणविष्णुर्हत्वात्व
रासुरम्॥ निहत्यसहयग्रीवंक्रीडायैयत्रसस्थितः॥ ७६॥ हत्वाज्वरन्तथाविष्णुस्तत्रवासमथाकरोत्॥ नरदेवासुरा
दीनाय्यँथाभवतिवैहितम्॥ ७७॥ ज्वरेणापीडिततनुंज्वरंहत्वामहासुरम्॥ सर्व्वलोकहितार्थायसोगदस्थानमाहरत्
॥ ७८॥ अगदस्नानसम्भूतःसञ्जातश्चमहासुरम्॥ तस्यस्वयंहयग्रीवोनामचक्रेपुनर्भ्भवम्॥ ७९॥ नपुनर्ज्जायतेय
स्मात्तत्रस्नात्वानरोत्तमः॥ अपुनर्भ्भवसञ्ज्ञंतत्सरस्तुपरिकीर्तितम्॥ ८०॥ मणिकूटाचलेविष्णुर्हयग्रीवस्वरूपधृक्॥

शतव्यामप्रमाणेनविस्तरेणैवशोभितम् ॥ ८१ ॥ तस्मात्पूर्व्वेभद्रकामःपर्व्वतस्तुत्रिकोणकः ॥ यत्रकालहयोनामशिव
लिङ्गोव्यवस्थितः ॥ ८२ ॥ तस्यासन्नेदक्षिणस्यामपुनर्भ्भवकुण्डकम् ॥ अपुनर्भ्भूसरस्तीरेपर्व्वतेभद्रकामदे ॥ ८३ ॥
हरवीथीतिविख्याताशिलाब्रह्मस्वरूपिणी ॥ तत्रयोगीमहादेवोयोगज्ञोध्यानतत्परः ॥ ८४ ॥ यन्दृष्ट्वायोगमान्मर्त्यो
मृतोमोक्षमवाप्नुयात् ॥ तस्यामेवशिलायान्तुगोकर्णोनामशङ्करः ॥ ८५ ॥ गोकर्णोनिहतोयेनअन्धकस्यसखापुरा ॥
गोकर्णस्यतथैशान्यांकेदारःशम्भुरन्ततः ॥ ८६ ॥ ततोऽन्धकसमःप्रोक्तःकमलाकरभोगधृक् ॥ यत्रास्तिशम्भुःकेदारः
सगिरिर्म्मदनाह्वयः ॥ तत्रैवकमलःप्रोक्तःसमहात्मालयप्रदः ॥ ८७ ॥ स्नात्वापुनर्भ्भवजलेदृष्ट्वागोकर्णयोगिनौ ॥ केदारकम
लौदृष्ट्वामुक्तिर्म्माधवदर्शने ॥ ८८ ॥ दृष्ट्वातुमाधवन्देवन्ततःकामठिँविलोकयेत् ॥ कामठिँविलोक्यतत्रस्थोनिरीक्षेदपुनर्भ्भ
वम् ॥ ८९ ॥ एवङ्कृत्वापीठयात्रामनेनक्रमयोगतः ॥ सप्तपूर्व्वान्त्सप्तपरानात्मानन्दशपञ्चच ॥ ९० ॥ पितॄनुद्धृत्यत्रिदिवन्न
येत्सपुरुषोत्तमः ॥ विष्णुस्थानसमुद्भूतापुनर्भ्भवहरीश्वर ॥ ९१ ॥ पापंहरस्वर्ग्गहेतोर्जितसङ्गमहोदधे ॥ अनेनैवतुमन्त्रेणस्ना
याद्धीरोपुनर्भवेत् ॥ ९२ ॥ हयग्रीवस्यतन्त्रन्तुपुरैवप्रतिपादितम् ॥ रूपंशृणुमहाराजचिन्तयेत्तस्ययादृशम् ॥ ९३ ॥ कर्प्पू
रकुन्दधवलःसितपद्मोपरिस्थितः ॥ चतुर्भ्भुजःकुण्डलादिनानालङ्कारभूषितः ॥ ९४ ॥ वरदाभयहस्तस्तुवामहस्तद्वयेनतु ॥

पुस्तकंसितपद्मञ्चधत्तेहस्तद्वयेपरे ॥ ९५ ॥ श्रीवत्सकौस्तुभोरस्कःक्वचिच्चगरुडासनः ॥ सर्व्वउत्तरतन्त्रोक्तःक्रमोग्राह्यः प्रपूजने ॥ ९६ ॥ विष्वक्सेनोहयारेस्तुनिर्म्माल्यधृग्विसर्ज्जने ॥ शिलारूपप्रतिच्छन्नसदास्तेगरुडध्वजः ॥ ९७ ॥ क्रीडमानोथगन्धर्व्वैःस्थितोलोकहितायच ॥ हयग्रीवस्यमन्त्रस्यसिद्धिर्ल्लक्षद्वयेनतु ॥ ९८ ॥ यावकैःपायसैराज्यैर्होमङ्कुर्व्वन्पुरश्चरेत् ॥ एकैनैवतुराजेन्द्रपुरश्चरणकर्म्मणा ॥ ९९ ॥ इष्टसिद्धिमवाप्येहविष्णुल्लोकमवाप्नुयात् ॥ मन्त्रैस्तुपञ्चवक्त्राणाम्पञ्चमूर्त्तीसदार्च्चयेत् ॥ १०० ॥ पूर्व्वंतत्पुरुषादीनाङ्कामादीन्पूजकोद्विजः ॥ कामस्तत्पुरुषोज्ञेयोयोगीशानःप्रकीर्त्तितः ॥ १ ॥ अघोरोत्र्यथगोकर्णःकेदारोवामदेवकः ॥ सद्योजातस्तुकमलामन्त्रैस्तैस्तैःप्रपूजयेत् ॥ २ ॥ पर्व्वतश्चैवकेदारःशिवगङ्गातुकालिका ॥ हयग्रीवस्यपूर्व्वस्याङ्केदारस्यतुपश्चिमे ॥ ३ ॥ छायाभोगाह्वयस्थानम्पुरीभोगवतीतथा ॥ योगच्छेन्मणिकूटाख्याङ्कौतुकाच्चपुनर्भ्भवम् ॥ ४ ॥ ससर्व्वतीर्थयात्राणांफलमाप्नोतिमानवः ॥ ज्यैष्ठेमासिसितेपक्षेपञ्चदश्यष्टमीषुच ॥ ५ ॥ स्नात्वापुनर्भ्भवजलेयःपश्येद्विधिवद्धरिम् ॥ ससर्व्वङ्कुलमुद्धृत्यविष्णुसायुज्यमाप्नुयात् ॥ ६ ॥ ज्यैष्ठन्तुसकलम्मासन्निःपश्येत्तुयोहरिम् ॥ हरौविलीनताय्याँतिससर्व्वैःसहितःकुलैः ॥ ७ ॥ एतत्तेकथितम्पुण्यंमणिकूटाह्वयम्पदम् ॥ वाराणसीतोप्यधिकंसिद्धविद्याधरार्च्चितम् ॥ ८ ॥ यःपटेच्छृणुयाद्विप्रोमणिकूस्यनिर्णयम् ॥ ससर्व्ववेदस्यफलम्प्राप्नोत्येवनसंशयः ॥

तीर्थनिरूपणम् नाम

॥ ९ ॥ ॥ इतिश्रीकालिकापुराणेएकाशीतितमोध्यायः ॥ ८१ ॥ ॥छ॥ ॥ और्व्वउवाच ॥ ॥ ततःपूर्व्वे
महाराजदर्प्पणोनामपर्व्वतः ॥ कुबेरोयत्रवसतिधनपालैःसमंसदा ॥ १ ॥ यस्मिन्नास्तेमध्यभागेरोहितोरोहिताकृतिः ॥
यस्मिल्लौंहादिकंस्पृष्टंस्वर्णतांयाँतितत्क्षणात् ॥ २ ॥ यत्रातिदूरेस्त्रवतिदर्प्पणोनामवैनदः ॥ हिमाद्रिप्रभवोनित्यंल्लौ
हित्यसदृशःफलैः ॥ ३ ॥ समुत्पन्नंहिलौहित्यंसर्व्वैर्देवगणैर्हरिः ॥ सर्व्वतीर्थोदकैःसम्यक्स्नापयामासतंसुतम् ॥ ४ ॥
तस्यस्नानसमुद्भूतःपापदर्प्पस्यपाटनः ॥ तेनायन्दर्प्पणोनामपुरादेवगणैःकृतः ॥ ५ ॥ तस्मिन्स्नात्वानदवरेयोर्च्च
येद्दर्प्पणाचले ॥ कुबेरम्प्रतिपत्तिथ्याङ्कार्त्तिकेशुक्लपक्षके ॥ ६ ॥ सयातिब्रह्मसदनमिहभूतिशतैर्युतः ॥ दर्प्पणाद्दि
शिपूर्व्वस्यामग्निमालाह्वयोगिरिः ॥ ७ ॥ सर्प्पाकारःसप्तशतव्यामदीर्घोर्द्धविस्तृतः ॥ तत्रतिष्ठतिवैवह्निरूर्द्ध्वभागेग्निमण्ड
ले ॥ ८ ॥ सिन्दूरपुञ्जसङ्काशेचारुदारुशिलातले ॥ तस्मिन्निरिन्धनोवह्निर्न्नित्यमद्यापिकाशते ॥ ९ ॥ भैरवस्यहिता
र्थायकामाख्यापरिसेवने ॥ पूर्व्वमेवस्थितस्तत्रसाक्षाद्वह्निर्ग्गणैःसह ॥ १० ॥ लौहित्यपाथसिस्नात्वाग्निमालाह्वय
ङ्गिरिम् ॥ आरुह्यवह्निंसम्पूज्यमोदतेविष्णुमन्दिरे ॥ ११ ॥ पुरस्तादग्निमालस्यकुण्डकंवाँरुणाह्वयम् ॥ तस्यतीरेगि
रिश्रेष्ठोनाम्नाकंसकरःस्मृतः ॥ १२ ॥ वरुणस्तत्रवसतिनित्यमेवजलाधिपः ॥ तस्मिन्कंसकरेसम्यक्पूजयित्वाप्रचेतसम्

॥ १३ ॥ स्नात्वाचवारुणेकुण्डेवारुणँल्लोकमाप्नुयात् ॥ आद्यव्यँजनमेवात्रपञ्चमस्वरसय्युँतम् ॥ १४ ॥ शम्भुचूडाशि
खायुक्तङ्कौबेरम्बीजमुच्यते ॥ सप्तमोयःपकारस्यबिन्दुचन्द्रार्द्धसय्युँतः ॥ १५ ॥ वह्निबीजमितिख्यातन्तेनवह्निम्प्रपूजये
त् ॥ मकारपञ्चमःसोमबिन्दुनावारुणःस्मृतः ॥ १६ ॥ एभिर्म्मन्त्रैरिमान्देवान्नित्यमेवप्रपूजयेत् ॥ वायुकूटोनामगिरिः
पूर्व्वस्याव्वँरुणाचलात् ॥ १७ ॥ द्विखण्डोवायुबीजेनमण्डलेनसमन्वितः ॥ वायुलोकस्थितश्चन्द्रोयस्मान्निःसृत्यमारुतः
॥ १८ ॥ ऊर्द्ध्वाधोभागमासाद्यनित्यव्वँहतिभूपते ॥ तत्रवायुंसमभ्यर्च्यवायुलोकमवाप्नुयात् १९ ॥ पूर्व्वव्वाँयुगिरेःशैलश्च
न्द्रकूटइतिस्मृतः ॥ त्रिकोणश्चन्द्रसङ्काशस्तदूर्द्ध्वेचन्द्रमण्डलम् ॥२०॥ द्वितीयवर्ग्गस्याद्यन्तुबिन्दुनासमलङ्कृतम् ॥ चन्द्रबीज
मितिप्रोक्तन्तेनचन्द्रम्प्रपूजयेत् ॥ २१ ॥ अद्यापिप्रतिदर्शेतुपर्व्वतन्तन्निशापतिः ॥ प्रदक्षिणीकरोत्येवदशभिश्चापिरवेचरैः
॥२२॥तस्यैवपूर्व्वभागेतुसोमकुण्डाह्वयंसरः ॥ तत्रस्नात्वाचपीत्वाचनरःकैवल्यमश्नुते ॥ २३ ॥ स्वर्ग्गादवतरच्चन्द्रःकामा
ख्यासेवनेयदा ॥ तदातद्रश्मिसङ्घातान्निःसृतास्तोयराशयः ॥ २४ ॥ तैस्तोयैर्व्वासवःकुण्डमकरोदिन्द्रचन्द्रयोः ॥ मध्ये
पुण्यतमेस्थानेस्वयंब्रह्मशिलोपरि ॥ २५ ॥ चन्द्ररश्मिसमुद्भूतचन्द्रकुण्डमहोदधे ॥ यय्यँम्भावंसमासाद्यतश्चन्द्रकलुषं
हरम् ॥ सुधास्त्रवणमाह्लादत्वञ्चन्द्रकलुषंहर ॥ २६ ॥ इत्यनेनतुमन्त्रेणयःस्नात्वाचन्द्रपयसि ॥ चन्द्रकूटंसमारुह्यपूजये

यस्तुतन्नरः ॥ २७ ॥ अविच्छिन्नासन्ततिस्तुसुकान्तातस्यजायते ॥ परत्रचन्द्रभवनम्भित्वायातिपरम्पदम् ॥ २८ ॥
तीरेतुचन्द्रकूटस्यनन्दनोनामवैगिरिः ॥ तस्मिन्वसतिशक्रस्तुकामाख्यासेवनेरतः ॥ २९ ॥ पञ्चभावंसमासाद्यसर्व्वंदे
वेश्वरोहरिः ॥ सेवितुन्त्रिदशेशानींसततर्व्वैंतंतेनतः ॥ ३० ॥ चन्द्रकूटस्यतुगिरेर्न्नन्दनस्यतथागिरेः ॥ प्रतिदर्शन्तथाचन्द्रः
प्रदक्षिणयतित्रिधा ॥ ३१ ॥ चन्द्रकूटजलेस्नात्वासमारुह्याथनन्दनम् ॥ आराध्यशक्रँल्लोकेशंमहाफलमवाप्नुयात् ॥ ३२ ॥
नन्दनात्पूर्व्वभागेतुभस्मकूटोमहागिरिः ॥ यःस्वयम्भर्ग्गरूपःससदाचेच्छान्तमुत्तमम् ॥ ३३ ॥ दक्षिणेभस्मकूटस्यदेवी
पीयूषधारिणी ॥ उर्व्वशीनामविख्याताशक्रप्रीतिकरीसदा ॥ ३४ ॥ देवैर्य्यत्स्थापितम्पूर्व्वममृतम्भोजनायवै ॥ कामाख्या
यास्तदादायस्वयंस्तिष्ठतिचोर्व्वशी ॥ ३५ ॥ शिलारूपोहरस्तान्तुसमावृत्यैवतिष्ठति ॥ साचैवामृतराशिन्तुकृत्वाकिञ्चन
किञ्चन ॥ ३६ ॥ उपस्थापयतेनित्यङ्कामाख्यायोनिमण्डले ॥ सुधाशिलान्तरस्थातुउर्व्वशीकुण्डवासिनी ॥ ३७ ॥ उर्व्वशी
भस्मकूटस्यमध्येकुण्डंसदामृतम् ॥ द्वात्रिंशद्धनुराकीर्ण्णम्पञ्चाशद्धनुरायतम् ॥ ३८ ॥ तत्रस्नात्वाचपीत्वाचनरोमोक्षमवाप्नु
यात् ॥ कामाख्यायोनिरैशानीन्दिशय्याँतिसदैवहि ॥ ३९ ॥ भस्मकूटेप्रविशतिउर्व्वशीमपियोगिनी ॥ आप्यायिताचामृते
ननित्यंदेवीप्रमोदते ॥ ४० ॥ मोदयुक्तामहादेवीकामेनमोदतेसदा ॥ भस्मकूटस्यचैशान्याम्मणिकूटोमहागिरिः ॥ ४१ ॥

१ सन्चकास्तेशा । २ रमते ।

मणिकर्णोनामहरस्तत्रतिष्ठतिलिङ्गकम् ॥ ससद्योजातरूपस्तुमणिकर्णइतीरितः ॥ ४२ ॥ सद्योजातस्यमन्त्रेणपूजितव्यः
सदाशिवः ॥ चन्द्रतीर्थजलेस्नात्वादृष्ट्वाचन्द्रंसवासवम् ॥ ४३ ॥ मणिकर्णेश्वरन्दृष्ट्वामुक्तिर्भ्भर्समाचलङ्गते ॥ श्वेतःश्वेताम्ब
रधरोदशाश्वोहेमभूषितः ॥ ४४ ॥ गदापाणिर्द्धिबाहुश्चकर्त्तव्योवरदःशशी ॥ सहस्रनेत्रोगौराङ्गोद्विभुजोवामहस्तगम् ॥
॥ ४५ ॥ वज्रङ्गदाङ्कुशन्धत्तेदक्षिणेनापिपाणिना ॥ ऐरावतगजस्थस्तुबाणतूणीरबन्धनः ॥ ४६ ॥ धनुश्चकक्षेगृह्णातिसेवमा
नोमहेश्वरीम् ॥ वकारानन्तरोवर्णश्चद्रबिन्दुसमन्वितः ॥ ४७ ॥ शक्रबीजमितिप्रोक्तंशक्रन्तेनप्रपूजयेत् ॥ नदीसुमङ्गलानाम
हिमपर्व्वतनिर्ग्गता ॥ ४८ ॥ पूर्व्वस्यांमणिकूटस्यसदास्रवतिशोभना ॥ मणिकूटंसमारुह्ययस्ताम्पश्यतिवैनदीम् ॥ ४९॥
सगङ्गास्नानजम्पुण्यमवाप्यत्रिदिवँव्रजेत् ॥ मणिकूटाचलात्पूर्व्वम्मत्स्यध्वजकुलाचलः ॥ ५० ॥ निर्दग्धोयत्रमदनोहरनेत्रा
ग्निनापुनः ॥ शरीरम्प्रापतपसासमाराध्यवृषध्वजम् ॥५१॥ तत्रमत्स्यस्वरूपस्तुकामदेवेनसंस्थितः॥अधित्यकायाम्पृथिवी
व्वीँक्षमाणःसमन्ततः ॥ ५२ ॥ नदीतुशाश्वतीनामतत्रास्तेदक्षिणस्रवा ॥ सरःकामसरोनामतत्रशैलेव्यवस्थितम् ॥ ५३ ॥
शाश्वत्याव्विँधिवत्स्नात्वापीत्वाकामसरोम्भसि ॥ विमुक्तपापःशुद्धात्माशिवलोकेमहीयते ॥५४॥ गन्धमादनपूर्व्वस्यांसुका
न्तोनामपर्व्वतः ॥तत्प्रान्तेवासवङ्कुण्डव्वाँसवामृतभोजनम्॥५५॥यत्रस्थित्वादक्षिणस्याम्पुराशक्रःशचीपतिः॥अमृतंश्रान्त

देहस्तुकामरूपान्तरेपपौ ॥ ५६ ॥ स्नात्वातुवासवेकुण्डेसमारुह्यसुकान्तकम् ॥ वासवस्यप्रियोभूत्वाशक्रलोकमवाप्नुया
त् ॥ ५७ ॥ पूर्व्वस्यान्तुसुकान्तस्यरक्षःकूटाह्वयोगिरिः ॥ यत्रास्तेसततन्देवोनिर्ऋतीराक्षसेश्वरः ॥ ५८ ॥ खड्गहस्तो
महाकायोवामेचर्म्मधरस्तथा ॥ जटाजूटसमायुक्तःप्रांशुःकृष्णाचलोपमः ॥ ५९ ॥ द्विभुजःकृष्णवासास्तुगर्द्दभोपरिसंस्थि
तः ॥ प्रान्तोपान्तौबिन्दुचन्द्रसदितावादिरेवच ॥ ६० ॥ नैर्ऋत्यङ्कथितम्बीजन्तेनतम्परिपूजयेत् ॥ रक्षःकूटंसमारुह्यनि
र्ऋतिंराक्षसेश्वरं ॥ ६१ ॥ यःपूजयेद्विधानेनचण्डिकांराक्षसेश्वरीम् ॥ नतस्यराक्षसेभ्योस्तिभयन्नृपकदाचन ॥ ६२ ॥
राक्षसाश्चपिशाचाश्चवेतालागणनायकाः ॥ तन्दृष्ट्वापुरुषंराजन्त्सर्व्वेदैवप्रविभ्यति ॥ ६३ ॥ रक्षःकूटात्पूर्व्वदिशिभैरवोना
ममाधवः ॥ पाण्डुनाथइतिख्यातोग्रावरूपेणसंस्थितः ॥ ६४ ॥ तम्पाण्डुनाथंसततमष्टाक्षरभवोत्तरं[1]म् ॥ तेनैवपूजयेद्देव
म्पाण्डुनाथाह्वयंहरिम् ॥ ६५ ॥ वर्णेनरक्तगौराङ्गोगदापद्मधरःकरे ॥ दक्षिणेचक्रशक्तीचबाहुभ्यामपिबिभ्रतम् ॥ ६६ ॥
चतुर्भ्भुजंरक्तपद्मसंस्थितम्मुकुटोज्ज्वलम् ॥ कुण्डलेबिभ्रतंशुद्धेश्रीवत्सोररुकमुत्तमम् ॥ ६७ ॥ नमोनारायणायेतिमूलबीजे
नवाहरेः ॥ एवंसम्पूजयेद्भूपचतुर्व्वर्ग्गस्यसिद्धये ॥ पाण्डुनाथस्योत्तरस्याम्ब्रह्मकूटाह्वयंसरः ॥ ६८ ॥ ब्रह्मणानिर्म्मितम्पूर्व्वंस्ना
नार्थंस्वर्ग्गवासिनाम् ॥ आयामेनशतव्यामंविस्तीर्णत्वेतदर्द्धकम् ॥ ६९ ॥ सर्व्वपापहरम्पुण्यन्देवलोकात्समागतम् ॥

१ अष्टाक्षरभवोद्भवम् इ० पा० ॥

कमण्डलुसमुद्भूतब्रह्मकुण्डामृतस्रवः ॥ ७० ॥ हरमेसर्व्वपापानिपुण्यंस्वर्ग्गञ्चसाधय ॥ इत्यनेनतुमन्त्रेणस्नात्वातंस्मिन्त्स
रोजले ॥ ७१ ॥ पाण्डुनाथञ्चसम्पूज्यविष्णुसायुज्यमाप्नुयात् ॥ ब्रह्मकुण्डजलेस्नात्वापूजयित्वाउमापतिम् ॥ ७२ ॥ वायु
कूटंसमारुह्यमुक्तिमेवाप्नुयान्नरः ॥ पाण्डुनाथात्पूर्व्वदिशिगिरिश्चित्रहरोहरिः ॥ सततय्यँत्ररमतेविष्णुर्व्वाराहरूपधृक् ॥ ७३ ॥
ततस्तुनीलकूटाख्यङ्कामाख्यानिलयम्परम् ॥ तत्पूर्व्वभागेवसतिब्रह्माब्रह्मगिरिःपुनः ॥ ७४ ॥ ब्रह्मशैलस्यपूर्व्वस्याम्भू
मिपीठंव्यवस्थितम् ॥ चारुनिम्नशुभावर्त्तङ्कामाख्यानाभिमण्डलम् ॥ ७५ ॥ तवोग्रतारारूपेणरमतेपरमेश्वरी ॥ तत्रतेनै
वरूपेणपूजितव्याशुभात्मिका ॥ ७६ ॥ तस्यास्तुबीजम्पूर्व्वस्मिन्नुत्तरेप्रतिपादितम् ॥ रूपंशृणुनरश्रेष्ठयेनध्येयासदाशि
वा ॥ ७७ ॥ कृष्णालम्बोदरीदीर्घाविरलारक्तदन्तिका ॥ चतुर्भुजाकृशाङ्गीतुदक्षिणेकर्त्तृखर्प्परौ ॥ ७८ ॥ खड्गञ्चेन्दीवर
व्वाँमेशीर्षेचैकाजटापुनः ॥ वामपादंशवस्योर्व्वोधार्न्नियाङ्घ्रिन्तुदक्षिणम् ॥ ७९ ॥ शवस्यहृदयेन्यस्यसाट्टहासम्प्रकुर्व्वती ॥
नागहारशिरोमालाभूषिताकामदापरा ॥ ८० ॥ त्रिकोणंमण्डलञ्चास्याहुङ्कारम्मध्यबीजकम् ॥ द्वारेशानांयोगिनीनाम्नामान्य
स्यास्तुतन्त्रके ॥ ८१ ॥ ज्ञेयानिनरशार्द्दूलयत्प्रोक्तव्वाँम्यगोचरे ॥ उर्व्वश्याव्विँधिवत्स्नात्वासंस्पृष्ट्वापाण्डुशिलान्तथा ॥ ८२ ॥ नी
लकूटंसमारुह्यपुनर्योनौनजायते ॥ पुरन्दरपुरायातेवाराणस्याःकलाधिके ॥ ८३ ॥ सुधासङ्कीर्णतोयौघैःपापंहरममोर्व्वशि ॥

अमृतश्राविणीदेवीसुधौघपरिपूरिणि ॥ ८४ ॥ अमृतेनामृतम्मेघदेहिदेविममोर्व्वशि॥ पुरन्दरप्रियेदेविवाराणस्याःसदाम्बि
के ॥ ८५ ॥ लोहित्यन्हदसङ्कीर्णेपापंहरममोर्व्वशि ॥ इत्येभिःस्तुतिभिर्म्मन्त्रैःस्नात्वापुण्योर्व्वशीजले ॥ ८६॥ सर्व्वपापवि
निर्म्मुक्तोविष्णुलोकेविचेष्टते ॥ उर्व्वशीद्विभुजाप्रोक्तास्वर्णकङ्कणधारिणी ॥ ८७ ॥ सौवर्णंपात्रममृतस्रावणायबिभर्त्तिच ॥
शुक्लवस्त्रागौरवर्णापीनोन्नतपयोधरा ॥८८॥ सर्व्वाङ्गसुन्दरीशुद्धासर्व्वाभरणभूषिता॥ एतन्नामाद्यक्षरन्तुमन्त्रमस्याःप्रकीर्त्ति
तम्॥८९॥उमातन्त्रेतुगदितमन्त्रमस्याःप्रकीर्त्तितम् ॥ गणेशःपूर्व्वद्वारस्थःकामाख्यापर्व्वतस्यतु ॥९०॥ तत्रैवचाग्निवेतालः
स्थितोद्वारिमनोहरः ॥ तयोरूपञ्चमन्त्रश्चयथोक्तंशम्भुनापुरा॥९१॥तदहम्प्रतिवक्ष्यामिमहाराजशृणुष्वमे ॥ ॐनमउल्कामु
खायेतिमूलबीजादिसङ्गतम् ॥९२॥ मन्त्रंसिद्धगणेशस्यद्वारस्थस्यप्रकीर्त्तितम्॥ रूपन्तस्यप्रवक्ष्यामिगजवक्त्रन्त्रिलोचनम्
॥ ९३ ॥ लम्बोदरश्चतुर्बाहुर्व्व्यालयज्ञोपवीतिनम् ॥ सूर्य्यकर्णम्बृहद्गण्डमेकदष्टम्पृथूदरम् ॥ ९४ ॥ दक्षिणेतुकरेदण्डमुत्प
लञ्चतथापरे ॥ लड्डुकम्परशुञ्चैववामतःपरिकीर्त्तितम् ॥ ९५ ॥ वृहत्वाक्षिप्तगगनम्पीनस्कन्धाङ्घ्रिपाणिनम् ॥ युक्तम्बुद्धि
कुबुद्धिभ्यामधस्तान्मूखिकान्वितम् ॥ ९६ ॥ तन्त्रस्तुयादृशःप्रोक्तःपञ्चवक्त्रस्यपूजने ॥ सएवतन्त्रोग्राह्यस्तुतादृग्विधिनिषे
धनम् ॥ ९७ ॥ द्विभुजःपीनवदनोरक्तनेत्रोभयङ्करः ॥ क्षुरिकान्दक्षिणेपाणौवामेरुधिरपात्रकम् ॥ ९८ ॥ दंष्ट्राकराल

१ एभिर्म्मन्त्रैर्य्यास्तुतयस्ताभिःस्नात्वेत्यर्थः ।   २ सुशोभनमितिवापाठः ।

वदनःकृशोधमनिसन्ततः ॥ जटान्दीर्घाम्मूर्द्धिबिभ्रद्घोरएवयुतस्तथा ॥ ९९ ॥ पचतुर्थोग्निबीजेनषष्ठस्वरविभूषितः ॥ अ
ग्निवेतालबीजोयंसर्व्वत्रभयनाशकः ॥ १०० ॥ पूजयेदग्निवेतालंसर्व्वत्रभयकारणम् ॥ यःपूजयेतस्यपुनर्भूतादिभ्यो
भयन्नहि ॥ १ ॥ अष्टानामथमन्त्राणांयोगिनीनाङ्क्रमान्नृप ॥ शैलपुत्रीप्रमुख्यानान्मन्त्राण्यष्टाक्षराणितु ॥ २ ॥ वैष्णवी
तन्त्रसंस्थानिपूर्वप्रोक्तानितानितु ॥ शैल्यपुत्र्यास्तथाचाङ्गमन्त्रम्प्राक्प्रतिपादितम् ॥ ३ ॥ रूपन्तुनरशार्दूलयोगिनी
नाम्विशेषतः ॥ प्रत्यक्षरेणबीजेनदुर्ग्गातन्त्रेणवात्विमाः ॥ ४ ॥ नेत्रबीजेनैवपूज्यायोगिन्योनृपसत्तम ॥ कात्यायनीम्पा
ददुर्ग्गान्दुर्ग्गातन्त्रेणपूजयेत् ॥ ५ ॥ तदेवपूजनंरूपन्तत्पूर्व्वम्प्रतिपादितम् ॥ कालरात्र्यास्तुमन्त्रेणकालरात्रिंप्रपूजयेत् ॥ ६ ॥
कालरात्र्यारूपमन्त्रौपुरेवप्रतिपादितौ ॥ महामायातन्त्रमन्त्रैःपूजयेद्भुवनेश्वरीम् ॥ ७ ॥ एताःसर्व्वास्तयोगिन्यःकामाख्या
वरफलप्रदाः ॥ विशेषयोयत्रनैवोक्तोरूपेतन्त्रेचपूजने ॥ ८ ॥ दुर्ग्गातन्त्रेणमन्त्रेणतत्रपूजांसमाचरेत् ॥ प्रत्येकय्योगिनींयस्तुपू
जयेन्नरसत्तमः ॥ ९ ॥ ससर्व्वंयज्ञस्यफलंप्राप्नोतिनरसत्तम ॥ नीलशैलस्यपूर्व्वस्मिन्स्वरूपम्प्रतिपादितम् ॥ १० ॥ नाभिमण्ड
लपूर्वस्याम्भस्मकूटस्यदक्षिणे ॥ पूर्व्वस्याङ्कर्प्परटोनामपर्व्वतोयमरूपधृक् ॥ ११ ॥ तत्रयाम्यशिलाकृष्णानीलाञ्जनसमप्र
भा ॥ अधित्यकायांराजेंद्रयामपञ्चसुविस्तृता ॥ १२ ॥ पूजयेत्तत्रशमनम्पाणौदण्डंसदैवयः ॥ १३ ॥ धत्तेतुपाणिनानित्यं

प्राणिदण्डस्यसाधनम् ॥ कृष्णवर्णन्तुद्विभुजङ्किरीटमुकुटोज्वलम् ॥ दधतश्चासिपुत्रीञ्चवामपाणौसदैवहि ॥ १४ ॥ कृष्ण
वस्त्रंस्थूलपद्मम्बहिर्न्निःसृतदन्तकम् ॥ भयाभयप्रदन्नित्यन्नृणामहिषवाहनम् ॥ १५ ॥ पूजयेत्परयाभक्त्यायाम्यबीजेनसा
धकः ॥ उपान्तवर्ग्गस्यादिर्य्योवर्णोबिद्विन्दुसंय्युतः ॥ १६ ॥ यमबीजमितिख्यातय्यँमस्यप्रीतिदायकम् ॥ अनेनैवतुमन्त्रे
णशमनम्पूजयेत्तुयः ॥१७॥ कर्प्पटाख्येऽचलवरेनापमृत्युमवाप्नुयात् ॥ पूर्व्वस्याङ्कर्प्पटाख्यान्तुशैलाच्चित्रइतिस्मृतः ॥१८॥
यःपूर्वभागप्रान्तेऽभूद्दिशाग्नेय्यामवस्थितः ॥ पीठस्तुब्रह्मग्रावस्तुसप्राक्पर्व्वतउच्यते॥१९॥ तस्मिन्वसंतिसततङ्ग्रहानवयथे
च्छया ॥ तत्रतान्पूजयेद्यस्तुसनाप्नोत्यापदंक्वचित् ॥ १२० ॥ रूपम्मन्त्रश्चसूर्य्यस्यचन्द्रस्यप्रतिपादितम् ॥ सप्तानामितरे
षान्तुमन्त्रंरूपंश्शृणुष्वमे ॥२१॥ रक्ताम्बरधरःशूलीशक्तिमाँश्चगदाधरः ॥ चतुर्भ्भुजोमेषरथोवरदोमङ्गलोमतः ॥ २२ ॥ पीता
म्बरधरःशूलीपीतमाल्यानुलेपनः ॥खड्गचर्म्मगदापाणिःसिंहस्थोवरदोबुधः ॥२३॥ स्वर्णगौरःपीतवासाःस्वर्णपर्य्यङ्कसंस्थि
तः ॥ मालाङ्कमण्डलुन्दण्डव्वाँमेनवरदायकम् ॥ २४ ॥ चतुर्भ्भुजश्चसर्व्वज्ञश्चिन्तयेद्देवतीर्थकम् ॥ सर्व्वैर्द्देवगणैर्न्नित्यन्तप्य
मानम्मनोहरम् ॥ २५ ॥ शुक्लवस्त्रंशुक्लवर्णशङ्खनागोपरिस्थितम् ॥ चतुर्भुजम्पाशमालांपुस्तकाञ्चवराभये ॥ २६ ॥ क्रमाद्द
क्षिणवामांन्यान्धत्तेदैत्यगुरुःसदा ॥ इन्द्रनीलनिभःशूलीवरदोगृध्रवाहनः ॥२७॥ पाशबाणासनधरोध्यातव्योर्क्कसुतःसदा ॥

कामदेवस्यबीजन्तुमन्त्रम्भौमस्यकीर्त्तितम् ॥ २८ ॥ दुर्ग्गायानेत्रबीजस्ययत्तुमध्याक्षरंशुभम् ॥ तन्मन्त्रंशशिपुत्रस्यस
र्व्वकामफलप्रदम् ॥ २९ ॥ नकारपञ्चमोद्विस्तुचतुःषट्स्वरसय्युँतम् ॥ गणेशबीजान्तमिदङ्गुरोर्म्मन्त्रम्प्रकीर्त्तितम् ॥ ३० ॥
बिन्द्विन्दुसय्युँतञ्चापिपूर्व्ववर्णद्वयम्पुनः ॥ सप्तमस्वरसय्युँक्तोमकरस्त्वादिरन्तरम् ॥ ३१ ॥ प्रान्तवर्ग्गाद्यक्षरन्तुबिन्द्वि
न्दुभ्यांसमन्वितम् ॥ भवेच्छुक्रस्यबीजन्तुसर्व्वकामसमृद्धिदम् ॥ ३२ ॥ प्रान्तवर्ग्गाद्यक्षरन्तुचन्द्रबिन्दुसमन्वितम् ॥ आ
द्यमन्त्रस्वरोपेतन्तद्देवेत्यादिसय्युँतम् ॥ ३३ ॥ शनैश्चरस्यमन्त्रोयसर्व्वदोषविनाशनः ॥ बिन्दुचन्द्रसमायुक्तन्नामाद्यक्ष
रमेववा ॥ ३४ ॥ तेषांसर्व्वग्रहाणाव्वैमन्त्रमङ्गंप्रकीर्त्तितम् ॥ शान्तिकेपौष्टिकेकृत्येएभिर्म्मन्त्रैर्ग्रहानिमान् ॥ ३५ ॥ पूज
येत्सर्व्वदाधीरोभूतिकामोमहामतिः ॥ वरदाभयहस्तश्चखड्गचर्म्मधरस्तथा ॥ ३६ ॥ सिंहासनगतःकृष्णोबाहुर्द्वीरःप्रच
क्ष्यते ॥ धूम्रवर्णोविशालाक्षःपुच्छरूपीचतुर्भुजः ॥ ३७ ॥ खड्गचर्म्मगदाबाणपाणिःकेतुःशरासनः ॥ उपान्तादिर्द्वादशे
नस्वरेणसहितःपुनः ॥ ३८ ॥ उपान्तःपञ्चमेनेन्दुबिन्दुभ्यांसहितावुभौ ॥ मन्त्रोयमनुलोमेनराहोःकेतोर्व्विलोमतः ॥
॥ ३९ ॥ आद्यक्षरम्पूर्व्ववद्वामन्त्रयुक्तमथैतयोः ॥ एवञ्चित्रेशैलवरेपूजयित्वानवग्रहान् ॥ ४० ॥ अभिष्टाल्लभतेकामान्न
रःशान्तितथोत्तमाम् ॥ चित्रकूटात्तुपूर्व्वस्यांकज्जलाचलउत्तमः ॥४१॥ सर्व्वविद्याधराद्यास्तुसन्त्यस्मिन्देवयोनयः ॥ तम्पर्व्व

तसमारुह्यप्रणम्यसकलान्सुरान् ॥ ४२ ॥ स्वर्ग्गंयाँन्तिनरःश्रेष्ठइहचाप्यतुलांश्रियम् ॥ कज्जलाचलशैलात्तुपूर्व्वस्मिञ्छु
भपर्व्वतः ॥ ४३ ॥ शच्यासार्द्धम्पुरारेमेयत्रचक्रःसुरेश्वरः ॥ तत्पूर्व्वस्याम्महादेवीनदीकपिलगङ्गिका ॥ ४४ ॥ तस्यांस्नात्वा
नरोगङ्गास्नानजम्फलमाप्नुयात् ॥ कामाख्यानिलयात्पूर्व्वन्दक्षिणस्यान्तथादिशि ॥ ४५ ॥ विद्यतेमहदावर्त्तम्भुविब्रह्मविल
म्महत्॥पञ्चविंशतिमानेनयोजनानान्नरेश्वर॥४६॥तस्मादायातिसुनदीसिताम्बोपमतोयभाक् ॥कोब्रह्माकीर्त्तितोदेवैर्य्यस्मा
त्तस्यविलासृता ॥४७॥ गङ्गेवफलदायस्मात्तस्मात्कपिलगङ्गिका ॥ स्नात्वाकपिलगङ्गायांसर्व्वमन्वन्तरासुच ॥ ४८॥ नवः
स्वर्ग्गमवाप्यादौब्रह्मलोकन्ततोव्रजेत् ॥ अतीत्यतान्नदींपूर्व्वभागेंदमनिकाह्वया ॥४९॥ नदीमहाकृष्णतोयापापस्यदमनीत
था ॥ ततोवृद्धाह्वयाचाभूदपरासरिदुत्तमा॥५०॥तस्यानद्याःपूर्व्वभागेगङ्गावत्फलदायिनी॥माघन्तुसकलम्मांसंस्नात्वामुक्ति
मवाप्नुयात् ॥५१॥ तथादमानिकायाश्चपरन्निर्व्वाणमाप्नुयात्॥ततःपूर्व्वेपरादेवीनाम्नासासरिदुत्तमा ॥५२ ॥ महतीदिव्यय
मुनायमुनावत्फलप्रदा॥दक्षिणाद्रिसमुद्भूतादक्षिणोदधिगामिनी ॥ ५३ ॥ तस्यान्तुकार्त्तिकम्मासंस्नात्वामुक्तिमवाप्नुयात् ॥
इहचैवोत्तमान्भोगान्भागधेयान्प्रतिष्ठितान् ॥५४॥ तन्मध्येभैरवोदेवोभर्ग्गसम्भोगसम्भवः॥दुर्ज्जयाख्येवरगिरावस्त्युपत्य
कभूमिगः॥५५॥योसौशरभरूपस्यमध्यखण्डोतिभैरवः ॥ सएवभैरवाख्योयम्पञ्चवक्रस्यमन्त्रकैः ॥५६॥ सम्पूज्यतत्रमति

का०
२७०

मान्सयातिशिवलोकताम् ॥ कामेश्वरस्ययापूजाकथितानीलनिर्णये॥५७॥सम्पूज्यश्चाचलश्रेष्ठेदुर्ज्जयेचाचलोत्तमे॥ तत्रभै
रवगङ्गास्तिसरोवैभैरवाह्वयम् ॥५८॥तयोःस्नात्वानरोयातिशिवलोकंसनातनम् ॥ दुर्ज्जयाख्यस्यपूर्व्वस्याम्पुरन्नामवरासनं
॥५९॥तद्दक्षिणेमहाशैलःक्षोभकोनामनामतः॥तस्मिन्गिरौशिलापृष्ठेरक्तदेवीव्यवस्थिता ॥१६०॥पञ्चपुष्करणीनाम्नापञ्चयो
निस्वरूपिणी ॥ एकत्रपञ्चभिर्दुर्ग्गायोनिभिःपञ्चवक्त्रकम् ॥६१॥ स्थितारमपितुन्तत्रनित्यमेवहिमाद्रिजा ॥ तच्छैलपूर्व्वभा
गेतुकान्तानाममहानदी ॥ ६२ ॥ दक्षिणंसागरायाँतिप्रथमश्चोत्तरश्रवा ॥ दिव्यकुण्डम्महाकुण्डन्तच्छैलोपत्यकाक्षितौ
॥ ६३ ॥ संस्थितंतत्रस्नात्वातुतान्देवीम्परिपूजयेत् ॥ दिव्यकुण्डेनरःस्नात्वापञ्चपुष्करणींशिवाम् ॥ ६४ ॥ यःपूजयेन्मह
भागःसयोनौनहिजायते ॥ पञ्चयोनिःपुष्करिणिपञ्चैवपरिसंस्थिताः ॥ ६५ ॥ यतस्ततःपञ्चरूपापञ्चपुष्करिणीमता ॥ य
थावत्फलपुष्पाणितथैताःपञ्चयोनयः ॥ ६६ ॥ पञ्चपुष्करणीदेव्यःप्रचण्डाःसर्व्वकामदाः ॥ त्रिपुरायास्तुतन्त्रेणताःपूज्या
साधकोत्तमैः ॥ ६७॥ कामेश्वरीतन्त्रमन्त्रैरथवापूजयेच्छिवाम् ॥ बालायास्त्रिपुरायास्तुमन्त्रमस्याःप्रकीर्त्तितम् ॥ ६८ ॥ का
मेश्वर्य्यास्तुवामन्त्रम्पूजनेस्याःप्रकीर्त्तितम् ॥ उग्रचण्डाप्रचण्डाचचण्डोग्राचण्डनायिका ॥ ६९ ॥ चण्डाचेतिचयोगिन्यःप
ञ्चास्याःपरिकीर्त्तिताः ॥ शिवलिङ्गश्चतत्रास्तिशिलायांहेरुकाह्वयम् ॥१७०॥ देवीदक्षिणपूर्व्वस्यान्नायकन्तन्तुपूजयेत् ॥

पु०
अ.८२

२७०

